## चतुर्थः पाठः

# कल्पतरुः

प्रस्तुत पाठ **'वेतालपञ्चविंशतिः'** नामक कथा संग्रह से लिया गया है, जिसमें मनोरञ्जक एवम् आश्चर्यजनक घटनाओं के माध्यम से जीवनमूल्यों का निरूपण किया गया है। इस कथा में जीमूतवाहन अपने पूर्वजों के काल से गृहोद्यान में आरोपित कल्पवृक्ष से सांसारिक द्रव्यों को न माँगकर संसार के प्राणियों के दु:खों को दूर करने का वरदान माँगता है क्योंकि धन तो पानी की लहर के समान चंचल है, केवल परोपकार ही इस संसार का सर्वोत्कृष्ट तथा चिरस्थायी तत्त्व है।

अस्ति हिमवान् नाम सर्वरत्नभूमिर्नगेन्द्रः। तस्य सानोरुपरि विभाति कञ्चनपुरं नाम नगरम्। तत्र जीमूतकेतुरिति श्रीमान् विद्याधरपतिः वसति स्म। तस्य गृहोद्याने कुलक्रमागतः कल्पतरुः स्थितः। स राजा जीमूतकेतुः तं कल्पतरुम् आराध्य तत्प्रसादात् च बोधिसत्वांशसम्भवं जीमूतवाहनं नाम पुत्रं प्राप्नोत्। स महान् दानवीरः सर्वभूतानुकम्पी च अभवत्। तस्य गुणैः प्रसन्नः स्वसचिवैश्च प्रेरितः राजा कालेन सम्प्राप्तयौवनं तं यौवराज्येऽभिषिक्तवान्। यौवराज्ये स्थितः स जीमूतवाहनः कदाचित् हितैषिभिः पितृमन्त्रिभिः उक्तः – "युवराज! योऽयं सर्वकामदः कल्पतरुः तवोद्याने तिष्ठति स तव सदा पूज्यः। अस्मिन् अनुकूले स्थिते शक्रोऽपि नास्मान् बाधितुं शक्नुयात्" इति।

आकर्ण्यैतत् जीमूतवाहनः अन्तरचिन्तयत् – "अहो बत! ईदृशममरपादपं प्राप्यापि पूर्वैः पुरुषैरस्माकं तादृशं फलं किमपि नासादितं किन्तु केवलं कैश्चिदेव कृपणैः कश्चिदपि अर्थोऽर्थितः। तदहमस्मात् मनोरथमभीष्टं साधयामि" इति। एवमालोच्य स पितुरन्तिकमागच्छत्। आगत्य च सुखमासीनं पितरमेकान्ते न्यवेदयत्– "तात! त्वं तु जानासि एव यदस्मिन् संसारसागरे आशरीरमिदं सर्वं धनं वीचिवच्चञ्चलम्। एकः परोपकार एवास्मिन् संसारेऽनश्वरः यो युगान्तपर्यन्तं यशः प्रसूते। तदस्माभिरीदृशः कल्पतरुः किमर्थं रक्ष्यते? यैश्च पूर्वैरयं 'मम मम' इति आग्रहेण रक्षितः, ते इदानीं कुत्र गताः? तेषां कस्यायम्? अस्य वा के ते? तस्मात् परोपकारैकफलसिद्धये त्वदाज्ञया इमं कल्पपादपम् आराधयामि।

अथ पित्रा 'तथा' इति अभ्यनुज्ञातः स जीमूतवाहनः कल्पतरुम् उपगम्य उवाच – "देव! त्वया अस्मत्पूर्वेषाम् अभीष्टाः कामाः पूरिताः, तन्ममैकं कामं पूरय। यथा पृथ्वीमदरिद्रां पश्यामि, तथा करोतु देव" इति। एवंवादिनि जीमूतवाहने "त्यक्तस्त्वया एषोऽहं यातोऽस्मि" इति वाक् तस्मात् तरोरुदभूत्।



क्षणेन च स कल्पतरुः दिवं समुत्पत्य भुवि तथा वसूनि अवर्षत् यथा न कोऽपि दुर्गत आसीत्। ततस्तस्य जीमूतवाहनस्य सर्वजीवानुकम्पया सर्वत्र यशः प्रथितम्।

## शब्दार्थाः

| | | |
|---|---|---|
| **अदरिद्राम्** | दरिद्रहीनाम् | दरिद्रता से रहित अर्थात् सम्पन्न |
| **हिमवान्** | हिमालयः | हिमालय |
| **नगेन्द्रः** | पर्वतराजः | पर्वतों का राजा |
| **सानोः** | शिखरस्य | शिखर के, चोटी के |
| **कुलक्रमागतः** | कुलक्रमाद् आगतः<br>कुलपरम्परया सम्प्राप्तः | कुल-परम्परा से<br>प्राप्त हुआ |
| **यौवराज्ये** | युवराजपदे | युवराज के पद पर |
| **शक्रः** | इन्द्रः | इन्द्र |
| **अर्थितः** | याचितः | माँगा |
| **अन्तिकम्** | समीपम् | पास में |
| **वीचिवत्** | तरङ्गवत् | तरङ्ग की तरह |
| **अभ्यनुज्ञातः** | अनुमतः | अनुमति पाया हुआ |
| **अर्थिने** | याचकाय | माँगने वाले के लिए, भिखारी के लिए |
| **दिवम्** | स्वर्गम् | स्वर्ग |
| **वसूनि** | धनानि | धन |
| **उपगम्य** | समीपं गत्वा | पास में जाकर |
| **दुर्गतः** | दुर्गतिम् आपन्नः | पीड़ित, निर्धन |
| **सर्वजीवानुकम्पया** | सर्वजीवेभ्यःकृपया | सभी जीवों के प्रति कृपा से |
| **प्रथितम्** | प्रसिद्धम् | प्रसिद्ध हो गया |

## अभ्यासः

1. **अधोलिखितानां प्रश्नानाम् उत्तराणि संस्कृतभाषया लिखत-**

(क) कञ्चनपुरं नाम नगरं कुत्र विभाति स्म?

(ख) जीमूतकेतुः किं विचार्य जीमूतवाहनं यौवराज्ये अभिषिक्तवान्?

(ग) कल्पतरोः वैशिष्ट्यमाकर्ण्य जीमूतवाहनः किम् अचिन्तयत्?

(घ) पाठानुसारं संसारेऽस्मिन् किं किं नश्वरम् किञ्च अनश्वरम्?

(ङ) जीमूतवाहनस्य यशः सर्वत्र कथं प्रथितम्?

**2. अधोलिखितवाक्येषु स्थूलपदानि कस्मै प्रयुक्तानि?**

(क) **तस्य** सानोरुपरि विभाति कञ्चनपुरं नाम नगरम्।

(ख) राजा सम्प्राप्तयौवनं **तं** यौवराज्ये अभिषिक्तवान्?

(ग) **अयं** तव सदा पूज्यः।

(घ) तात! **त्वं** तु जानासि यत् धनं वीचिवच्चञ्चलम्।

**3. अधोलिखितानां पदानां पर्यायपदं पाठात् चित्वा लिखत -**

| | | | | | |
|---|---|---|---|---|---|
| (क) पर्वतः | – | ........................ | (ख) भूपतिः | – | ........................ |
| (ग) इन्द्रः | – | ........................ | (घ) धनम् | – | ........................ |
| (ङ) इच्छितम् | – | ........................ | (च) समीपम् | – | ........................ |
| (छ) धरित्रीम् | – | ........................ | (ज) कल्याणम् | – | ........................ |
| (झ) वाणी | – | ........................ | (ञ) वृक्षः | – | ........................ |

**4. 'क' स्तम्भे विशेषणानि 'ख' स्तम्भे च विशेष्याणि दत्तानि। तानि समुचितं योजयत-**

| **'क' स्तम्भ** | **'ख' स्तम्भ** |
|---|---|
| कुलक्रमागतः | परोपकारः |
| दानवीरः | मन्त्रिभिः |
| हितैषिभिः | जीमूतवाहनः |
| वीचिवच्चञ्चलम् | कल्पतरुः |
| अनश्वरः | धनम् |

**5. (क) "स्वस्ति तुभ्यम्" स्वस्ति शब्दस्य योगे चतुर्थी विभक्तिः भवति। इत्यनेन नियमेन अत्र चतुर्थी विभक्तिः प्रयुक्ता। एवमेव (कोष्ठकगतेषु पदेषु) चतुर्थी विभक्तिं प्रयुज्य रिक्तस्थानानि पूरयत-**

(*i*) स्वस्ति ...................... (राजा)

(*ii*) स्वस्ति ...................... (प्रजा)

(*iii*) स्वस्ति ...................... (छात्र)

(*iv*) स्वस्ति ...................... (सर्वजन)

**(ख) कोष्ठकगतेषु पदेषु षष्ठीं विभक्तिं प्रयुज्य रिक्तस्थानानि पूरयत-**

(*i*) तस्य ............ उद्याने कल्पतरुः आसीत्। (गृह)

(*ii*) सः ............ अन्तिकम् अगच्छत्। (पितृ)

(*iii*) ............ सर्वत्र यशः प्रथितम् (जीमूतवाहन)

(*iv*) अयं ............ तरुः? (किम्)

**6. स्थूलपदान्यधिकृत्य प्रश्ननिर्माणं कुरुत-**

(क) **तरोः** कृपया सः पुत्रम् अप्राप्नोत्।

(ख) सः **कल्पतरवे** न्यवेदयत्।

(ग) **धनवृष्ट्या** कोऽपि दरिद्रः नातिष्ठत्।

(घ) कल्पतरुः **पृथिव्यां** धनानि अवर्षत्।

(ङ) **जीवानुकम्पया** जीमूतवाहनस्य यशः प्रासरत्।

**7. (क) यथास्थानं समासं विग्रहं च कुरुत-**

(*i*) विद्याधराणां पतिः ....................

(*ii*) ................................ गृहोद्याने

(*iii*) नगानाम् इन्द्रः ........................

(*iv*) .............................. परोपकारः

(*v*) जीवानाम् अनुकम्पया ...............

**(ख) उदाहरणमनुसृत्य मतुप् (मत्, वत्) प्रत्ययप्रयोगं कृत्वा पदानि रचयत-**

| | | | | |
|---|---|---|---|---|
| **यथा**- हिम | + | मतुप् | = | हिमवान् |
| श्री | + | मतुप् | = | श्रीमान् |
| (*i*) शक्ति | + | मतुप् | = | ........................ |
| (*ii*) धन | + | मतुप् | = | ........................ |
| (*iii*) बुद्धि | + | मतुप् | = | ........................ |
| (*iv*) धैर्य | + | मतुप् | = | ........................ |
| (*v*) गुण | + | मतुप् | = | ........................ |

## योग्यताविस्तारः

**(क) ग्रन्थ परिचय** – "वेतालपञ्चविंशतिका" पच्चीस कथाओं का संग्रह है। इस नाम की दो रचनाएँ पाई जाती हैं। एक शिवदास (13वीं शताब्दी) द्वारा लिखित ग्रन्थ है जिसमें गद्य और पद्य दोनों विधाओं का प्रयोग किया गया है। दूसरी जम्भलदत्त की रचना है जो केवल गद्यमयी है। इस कथा में कहा गया है कि राजा विक्रम को प्रतिवर्ष कोई तांत्रिक सोने का एक फल

देता है। उसी तांत्रिक के कहने पर राजा विक्रम श्मशान से शव लाता है। जिस पर सवार होकर एक वेताल मार्ग में राजा के मनोरञ्जन के लिए कथा सुनाता है। कथा सुनते समय राजा को मौन रहने का निर्देश देता है। कहानी के अन्त में वेताल राजा से कहानी पर आधारित एक प्रश्न पूछता है। राजा उसका सही उत्तर देता है। शर्त के अनुसार वेताल पुनः श्मशान पहुँच जाता है। इस तरह पच्चीस बार ऐसी ही घटनाओं की आवृत्ति होती है और वेताल राजा को एक-एक करके पच्चीस कथाएँ सुनाता है। ये कथाएँ अत्यन्त रोचक, भावप्रधान और विवेक की परीक्षा लेने वाली हैं।

**(ख) क्त क्तवतु प्रयोगः-**

**क्त** - इस प्रत्यय का प्रयोग सामान्यतः कर्मवाच्य में होता है।

**क्तवतु** - इस प्रत्यय का प्रयोग कर्तृवाच्य में होता है।

**क्त प्रत्ययः-**

- जीमूतवाहनः हितैषिभिः मन्त्रिभिः **उक्तः**।
- कृपणैः कश्चिदपि अर्थः **अर्थितः**।
- त्वया अस्मत्कामाः **पूरिताः**।
- तस्य यशः **प्रथितम्** (कर्तृवाच्य में क्त)

**क्तवतु प्रत्ययः-**

- सा पुत्रं यौवराज्यपदेऽ**भिषिक्तवान्**।
- एतदाकर्ण्य जीमूतवाहनः **चिन्तितवान्**।
- स सुखासीनं पितरं **निवेदितवान्**।
- जीमूतवाहनः कल्पतरुम् **उक्तवान्**।

**(ग) लोककल्याण-कामना-विषयक कतिपय श्लोक-**

- सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः।
  सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग्भवेत्।।
- सर्वस्तरतु दुर्गाणि, सर्वो भद्राणि पश्यतु।
  सर्वः कामानवाप्नोतु, सर्वः सर्वत्र नन्दतु।।
- न त्वहं कामये राज्यं न स्वर्गं न पुनर्भवम्।
  कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्।।

**अध्येतव्यः ग्रन्थः**

वेतालपञ्चविंशतिकथा, अनुवादक, दामोदर झा, चौखम्भा विद्याभवन, वाराणसी, 1968